अथ

# शुक्लयजुर्वेदीयषडङ्गरुद्राष्टाध्यायी

प्रारभ्यते ।

॥ श्रीगणेशाय नमः ॥ आचम्य प्राणानायम्य । देशकालौ संकीर्त्य च । संकल्पः।अद्य पूर्वोच्चारितैवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौ ममाऽऽत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं धर्मार्थकाममोक्षासिद्धिद्वारा सर्वव्याधिनिरासपूर्वकं सर्वाभीष्टसिद्ध्यर्थं श्रीभवानीशङ्करदेवताप्रीत्यर्थं च रुद्रैकादशिन्याभिषेकयुक्तं सकृदावर्तनाभिषेकयुक्तं वा अमुकद्रव्येण रुद्राभिषेकमहं करिष्ये । तदङ्गतया विहितान् शरीरशुद्ध्यर्थं लघुषडङ्गन्यासाँश्च करिष्ये ॥ मनोजूतिरितिमन्त्रस्य बृहस्पतिर्ऋषिः। बृहती छन्दः। बृहस्पतिर्देवता । हृदयन्यासे जपे वि

रु.

१

नियोगः ॥ ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनो
त्वरिष्टं यज्ञꣳसमिमन्दधातु ॥ विश्वे देवास ऽइह मादयन्तामो ३
म्प्रतिष्ठ ॥ ॐ हृदयाय नमः ॥ १ ॥ अबोध्यग्निरितिमन्त्रस्य बुधग
विष्ठिरा ऋषिः। त्रिष्टुप् छन्दः। अग्निर्देवता । शिरोन्यासे जपे विनियो
गः ॥ ॐ अबोद्ध्यग्निः समिधाजनानाम्प्रतिधेनुमिवायतीमुषासम् ।
यह्वाऽइव प्रवयामुज्जिहानाः प्रभानवः सिस्रतेनाकमच्छ ॥ ॐ शिरसे
स्वाहा ॥ २ ॥ मूर्द्धानमितिमन्त्रस्य भरद्वाज ऋषिः। त्रिष्टुप् छन्दः। १
अग्निर्देवता। शिखान्यासे जपे विनियोगः ॥ ॐ मूर्द्धानन्दिवोऽअरति

न्या

न्पृथिव्यावैश्वानरमृतऽआजातमग्निम् ॥ कविᳬसम्म्राजमतिथिञ्जनां
नामासन्नापात्रंजनयन्तदेवाः ॥ ॐ शिखायै वषट् ॥ ३ ॥ मर्म्माणित
इतिमन्त्रस्य अप्रातिरथ ऋषिः।विराट् छन्दः। मर्म्माणि देवता। कवच
न्यासे जपे विनियोगः ॥ ॐ मर्म्माणितेव्वर्म्मणाच्छादयामिसोमं
स्त्वाराजामृतेनानुवस्ताम् ॥ उरोर्व्वरीयोव्वरुणस्तेकृणोतुजयन्त
न्त्वानुदेवामदन्तु ॥ ॐ कवचायहुम् ॥ ४ ॥ विश्वतश्चक्षुरितिमन्त्र
स्य विश्वकर्मा भौवन ऋषिः। त्रिष्टुप् छन्दः।विश्वकर्मा देवता। नेत्रन्या
से जपे विनियोगः ॥ ॐ व्विश्वतश्चक्षुरुतव्विश्वतोमुखोव्विश्वतोबाहुरु

रु. २

तांविश्वतःस्पात् ॥ सम्बाहुभ्यान्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देव ऽएकः ॥ ॐ नेत्रत्रयाय वौषट् ॥ ५ ॥ मानस्तोक इतिमन्त्रस्य परमेष्ठी ऋषिः । जगती छन्दः । एकरुद्रो देवता । अस्त्रन्यासे जपे विनियोगः ॥ ॐ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः ॥ मानोवीरान्रुद्रभामिनोवधीर्हविष्मन्तःसदमित्त्वाहवामहे ॥ ॐ अस्त्राय फट् ॥ ६ ॥ ॥ इति लघुषडङ्गन्यासाः ॥ ॥ ७ ॥



न्या. २

॥ श्रीगणेशायनमः ॥ ॥ हरिः॑ऽॐ ॥ माच्छन्दः॑ प्प्रमाच्छन्दः॑ प्प्रतिमाच्छन्दोऽअस्रीवयश्छन्दः॑ पुङ्क्तिश्छन्दऽउष्णिकछन्दोबृहतीच्छन्दोनुष्टुप्छन्दोविराट्छन्दोगायत्रीच्छन्दस्त्रिष्टुप्छन्दोजगतीच्छन्दः॑ ॥ १ ॥ पृथिवीच्छन्दोन्तरिक्षञ्छन्दोद्यौश्छन्दः समाश्छन्दोनक्षत्राणिच्छन्दोवाकछन्दोमनश्छन्दः॑ कृषिश्छन्दोहिरण्यञ्छन्दोगौश्छन्दोजाच्छन्दोश्वश्छन्दः॑ ॥ २ ॥ गणानान्त्वागणपतिंहवामहेप्प्रियाणान्त्वाप्प्रियपतिंहवामहेनिधीनान्त्वानिधिपतिंहवामहेवसोमम ॥ आहमजानिगर्भधमात्वमजासिगर्भधम् ॥ ३ ॥ गायत्रीत्रिष्टुब्जगत्यनुष्टु

प्पुङ्क्ता सुह ॥ बृहत्युष्णिहाककुप्सूचीभिः शम्यन्तु त्वा ॥ ४ ॥ द्वि अ. १
रु. ३ पदा याश्चतुष्पदास्त्रिपदा याश्च षट्पदाः ॥ विच्छन्दा याश्च सच्छन्दाः
सूचीभिः शम्यन्तु त्वा ॥ ५ ॥ सहस्तोमाः सहच्छन्दस ऽआवृतः सह
प्रमा ऽऋषयः सप्त दैव्याः ॥ पूर्वेषाम्पन्थामनुदृश्य धीरा ऽअन्वालेभि
रे रथ्यो न रश्मीन् ॥ ६ ॥ यज्जाग्रतो दूरमुदैति दैवन्तदु सुप्तस्य तथैवै
ति ॥ दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मे मनः शिवसङ्कल्पमस्तु ॥ ७ ॥
येन कर्म्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ॥ यदपूर्व्वं यु ३
क्षमन्तः प्रजानान्तन्मे मनः शिवसङ्कल्पमस्तु ॥ ८ ॥ यत्प्रज्ञानमुत

चेतोधृतिश्चयज्ज्योतिरन्तरमृतम्प्रजासु ॥ यस्मान्नऽऋतेकिञ्चनक
र्म्मक्रियतेतन्मेमनःशिवसङ्कल्पमस्तु ॥ ९ ॥ येनेदम्भूतम्भुवनम्भ
विष्यत्परिगृहीतममृतेनसर्व्वम् ॥ येनयज्ञस्तायतेसप्तहोतातन्मेम
नःशिवसङ्कल्पमस्तु ॥ १० ॥ यस्मिन्नृचःसामयजूंषियस्मिन्प्र
तिष्ठितारथनाभाविवाराः ॥ यस्मिँश्चित्तंसर्व्वमोतम्प्रजानान्तन्मे
मनःशिवसङ्कल्पमस्तु ॥ ११ ॥ सुषारथिरश्वानिवयन्मनुष्यान्नेनी
यतेभीशुभिर्व्वाजिनऽइव॥ हृत्प्रतिष्ठंयदजिरञ्जविष्ठन्तन्मेमनःशिवस
ङ्कल्पमस्तु॥१२॥ इतिसंहितायांरुद्रपाठेप्रथमोऽध्यायः॥१॥ ॥छ॥

ऋ. ८

सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् ॥ सभूमिꣳसर्वतःस्पृत्वात्यति अ.

ष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुषऽएवेदꣳसर्वँय्यद्भूतँय्यच्चभाव्यम् ॥ उता २

मृतत्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥ एतावानस्यमहिमातोज्या

याँश्चपूरुषः ॥ पादोऽस्यविश्वाभूतानित्रिपादस्यामृतन्दिवि ॥ ३ ॥

त्रिपादूर्ध्वऽउदैत्पुरुषःपादोऽस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्राम

त्साशनानशनेऽअभि ॥ ४ ॥ ततोविराडजायतविराजोऽअधिपूरुषः ॥

सजातोऽअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ ५ ॥ तस्माद्यज्ञात्सर्व ४

हुतःसम्भृतम्पृषदाज्यम् ॥ पशूँस्ताँश्चक्रेवायव्यानारण्याग्राम्या

श्चुये ॥ ६ ॥ तस्माद्युज्ञात्सर्वुहुतुऽऋचुःसामानिजज्ञिरे ॥ छन्दांᳫंसि
जाज्ञिरेतस्मुाद्यजुस्तस्मादजायत ॥ ७ ॥ तस्मुादश्वाऽअजाय
न्तुयेकेचौभुयादतः ॥ गावौहजज्ञिरेतस्मुात्तस्माज्जुाताऽअजाव
यः ॥ ८ ॥ तँय्युज्ञम्बुर्हिषिप्प्रौक्षुन्पुरुषञ्जातमग्ग्रुतः ॥ तेनदेवाऽअ
यजन्तसुाध्याऽऋषयश्चुये ॥ ९ ॥ यत्पुरुषँव्यदधुःकतिधाव्यकल्पय
न् ॥ मुखङ्किमस्यासुीत्किम्बाहूकिमूरूपादाऽउच्यते ॥ १० ॥ ब्राह्मु
णोस्युमुखमासीद्बाहूराजुन्य॒ःकृतः ॥ ऊरूतदस्युयद्वैश्यःपद्भ्याᳫंशू
द्रोऽअजायत ॥११॥ चन्द्रमामनसोजुातश्चक्षोःसूर्य्योऽअजायत ॥

श्रोत्रांद्वायुश्चंप्प्राणश्च्चमुखांदुग्निरंजायत ॥ १२ ॥ नाभ्यांऽआसी अ.
दुन्तारिक्षठंशीष्णोंद्यौःसमंवर्त्तत ॥ पुद्भ्याम्भूमिुर्दिशुःश्रोत्रात्तथालो २
ऋ. ५ काँ२॥ऽअंकल्पयन् ॥ १३ ॥ यत्पुरुषेणहुविषादेवायुज्ञमंतन्वत ॥
वुसुन्तोस्यासीदाज्ज्यंङ्ग्रीष्मऽइध्मःशुरद्धुविः ॥ १४ ॥ सुप्ता
स्यांसन्पारिधयुस्त्रिःसुप्तसुमिधंःकृताः ॥ देवायद्युज्ञन्तंन्वुानाऽअब
ध्नुन्पुरुषम्पुशुम् ॥ १५ ॥ युज्ञेनंयुज्ञमंयजन्तदेवास्तानिधर्म्माणि
प्प्रथुमान्यांसन् ॥ तेहुनाकंम्महिमानंःसचन्तुयत्रपूर्वेसाध्याःसन्ति ५
देवाः ॥ १६ ॥ अुद्भ्यःसम्भृतःपृथिव्यैरसांच्चाुविश्वकंर्म्मणुःसमंवर्त्तुता

ग्ग्रे ॥ तस्युत्त्वष्टांविदधंद्रूपमैतितन्नमर्त्त्यस्यदेवुत्त्वमाजानुमग्ग्रे ॥ १७ ॥
वेदाहमेतम्पुरुषम्मुहान्तमादित्यवर्णन्तमसःपुरस्तात् ॥ तमेवाविदि
त्वातिमृत्युमेतिनान्यःपन्थाविद्यतेयनाय ॥ १८ ॥ प्रजापतिश्चरति
गर्ब्भेऽअन्तरजायमानोबहुधाविजायते ॥ तस्युयोनिम्परिपश्यन्तिधी
रास्तस्मिन्हतस्त्थुर्भुवनानिविश्वा ॥ १९ ॥ योदेवेब्भ्यऽआतपतियो
देवानाम्पुरोहितः ॥ पूर्व्वोयोदेवेब्भ्योजातोनमोरुचायब्राह्मये ॥ २० ॥
रुचम्ब्राह्मञ्जनयन्तोदेवाऽअग्ग्रेतदब्रुवन् ॥ यस्त्वैवम्ब्राह्मणोविद्या
त्तस्यदेवाऽअसन्वशे ॥ २१ ॥ श्रीश्चतेलक्ष्मीश्चपत्क्न्यावहोरात्रे

पा॒ऽश्वैनक्ष॑त्राणिरू॒पम॒श्विनौ॒ऽव्यात्त॑म् ॥ इ॒ष्णन्नि॑षाणामु॒म्म॑ऽइषाणस

र्व्वलो॒कम्म॑ऽइषाण ॥ २२ ॥ ॥ इतिसर्व्वहितायांरुद्रपाठेद्वितीयोऽध्या

यः ॥ २ ॥ ॥७॥ आ॒शुःशिशा॑नोवृष॒भोनभी॒मोघ॑नाघ॒नःक्षोभ॑णश्चर्ष

णीनाम् ॥ स॒ङ्क्रन्द॑नोऽनिमि॒षऽएकवी॒रःश॒तर्ठ॑सेना॑ऽअजयत्सा॒कमि

न्द्रः ॥ १ ॥ स॒ङ्क्रन्द॑नेनानिमि॒षेण॑जि॒ष्णुना॑यु॒त्का॒रेण॑दु॒श्च्य॒व॒नेन॑धृ॒ष्णु

ना॑ ॥ तदिन्द्रे॑णजयत॒तत्स॑हद्ध्वं॒युधो॑नर॒ऽइषु॑हस्तेन॒वृष्णा॑ ॥ २ ॥ सऽ

इषु॑हस्तैः॒सनि॑षङ्गिभि॒र्व्वशी॒सर्ठ॑स्र॒ष्टा॒सयु॑ध॒ऽइन्द्रो॑ग॒णेन॑ ॥ स॒र्ठ॒सृ॒ष्ट॒जि

त्सो॑म॒पाबा॑हुश॒र्द्ध्यु॒ग्रध॑न्वा॒प्रति॑हिताभि॒रस्ता॑ ॥ ३ ॥ बृह॑स्पते॒परि॑दी

यारथेनरक्षोहामित्राँ२॥ऽअपबाधमानः ॥ प्प्रभञ्जन्त्सेनाःप्प्रमृणोयु
धाजयन्नस्माकमेद्धयविता रथानाम् ॥ ४ ॥ बलविज्ञायस्थविरःप्प्रवी
रःसहस्वान्वाजीसहमानऽउग्रः ॥ अभिवीरोऽअभिसत्वासहोजाजैत्र
मिन्द्ररथमातिष्ठगोवित् ॥ ५॥ गोत्रभिदङ्गोविदँवज्जबाहुञ्जयन्तमज्ज्म
प्प्रमृणन्तमोजसा ॥ इमर्ठसजाताऽअनुवीरयद्ध्वमिन्द्रर्ठसखायोऽअनु
सर्ठरभद्ध्वम् ॥ ६ ॥ अभिगोत्राणिसहसागाहमानोदयोवीरःशतम
न्न्युरिन्द्रः ॥ दुश्च्यवनःपृतनाषाडयुद्ध्योस्म्माकर्ठसेनाऽअवतुप्प्रयु
त्सु ॥ ७ ॥ इन्द्रऽआसान्नेताबृहस्पतिर्दक्षिणायज्ञःपुरऽएतुसोमः ॥

देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्वग्ग्रम् ॥ ८ ॥ इन्द्र
स्यवृष्णोव्वरुणस्यराज्ञऽआदित्यानाम्मरुताᳬशर्द्धऽउग्ग्रम् ॥ महा
मनसाम्भुवनच्च्यवानाङ्घोषोदेवानाञ्जयतामुदस्थात् ॥ ९ ॥ उद्ध
र्षयमघवन्नायुधान्युत्सत्त्वनाम्मामकानाम्मनाᳬसि ॥ उद्वृत्रहन्वा
जिनाँव्वाजिनान्युद्रथानाञ्जयताँय्यन्तुघोषाः ॥ १० ॥ अस्म्माकमि
न्द्रःसमृतेषुध्वजेष्वस्म्माकँय्याऽइषवस्ताजयन्तु ॥ अस्म्माकँव्वी
राऽउत्तरेभवन्त्वस्म्माँ२॥ऽउदेवाऽअवताहवेषु ॥ ११ ॥ अमीषाञ्चि
त्तम्प्रतिलोभयन्तीगृहाणाङ्गान्यप्प्वेपरेहि ॥ अभिप्प्रेहिनिर्दहहृत्सु

शोकैरन्धेनामित्राास्तमंसासचन्ताम् ॥ १२ ॥ अवंसृष्टापरापतुशर
व्येब्रह्मसंसर्ठंशिते ॥ गच्छामित्रान्प्रपद्यस्वमामीषाङ्कञ्चनोच्छिषः
॥ १३ ॥ प्रेताजयंतानरऽइन्द्रोवृःशर्म्मयच्छतु ॥ उग्रावंःसन्तुबाहवो
नाधृष्ष्यायथासंथ ॥ १४ ॥ असौय्यासेनामरुतःपरेषामुब्भ्यैतिनुऽ
ओजंसास्पर्द्धमाना ॥ ताङ्गूंहततमुसापंब्रतेनुयथामीऽअन्नयोऽअन्नय
न्नजानन् ॥ १५ ॥ यत्रंबाणाःसुम्पतन्तिकुमाराविंशिखाऽइंव ॥ तन्नऽ
इन्द्रोबृहुस्पातुरदितिःशर्म्मयच्छतुविश्श्वाहाशर्म्मयच्छतु ॥ १६ ॥
मर्म्माणितेवर्म्मणाच्छादयामिसोमंस्त्वाराजामृतेनानुंवस्ताम् ॥ उ

रोर्वरीयुोव्वरुणस्तेकृणोतुजयंन्तुन्त्वानुदेवामदन्तु ॥ १७ ॥ ॥ इति
सर्ठहितायांरुद्रजाप्येतृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ व्विभ्राड्बृह
त्पिबतुसोम्म्यम्मद्धायुर्दधद्यज्ञपंतावविहुतम् ॥ व्वातंजूतोयोऽअभिर
क्षतित्क्मनाप्रजाःपुपोषपुरुधाव्विराजति ॥ १ ॥ उदुत्यञ्जातवेदसन्दे
वँव्वहन्तिकेतवः ॥ दृशेव्विश्वायसूर्य्यम् ॥ २ ॥ येनापावकचक्षसाभु
रण्यन्तञ्जनाँर॥ऽअनु ॥ त्वँव्वरुणपश्यसि ॥ ३ ॥ दैव्यावद्धूर्य्यऽआग
तर्ठरथैनसूर्य्यत्वचा ॥ मद्धायज्ञर्ठसमञ्जाथे ॥ तम्प्रत्क्नथायँव्वेनश्चि
त्रन्देवानाम् ॥ ४ ॥ तम्प्रत्क्नथापूर्व्वथाव्विश्वथेमथाज्येष्ठतातिम्बर्हि ८

षदेᳫंस्वाव्विदम् ॥ प्प्रतीचीनँव्वृजनन्दोहसेधुनिमाशुञ्जयन्तमनुयासुव्व
र्द्धसे ॥ ५ ॥ अयँव्वेनश्चोदयत्पृश्निगर्ब्भाज्ज्योतिर्ज्जरायूरजसोव्विमाने ॥
इममपाᳫंसङ्गमेसूर्य्यस्यशिशुन्नव्विप्प्रामतिभीरिहन्ति ॥ ६ ॥ चित्र
न्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्यव्वरुणस्याग्नेः ॥ आप्प्राद्यावापृथि
वीऽअन्तरिक्षᳫंसूर्य्यऽआत्माजगतस्तस्थुषश्च ॥ ७ ॥ आनऽइडा
भिर्व्विदथेसुशस्तिव्विश्श्वानरःसवितादेवऽएतु ॥ अपियथायुवानोमत्स
थानोव्विश्श्वञ्जगदभिपित्वेमनीषा ॥ ८ ॥ यदद्यकच्चव्वृत्रहन्नुदगाऽअभि
सूर्य्य ॥ सर्व्वन्तदिन्द्रतेव्वशे ॥ ९ ॥ तरणिर्व्विश्श्वदर्शतोज्ज्योतिष्कृदसि

रु. १ अ. ४

सूर्य्यं ॥ विश्वुमाभांसिरोचुनम् ॥ १० ॥ तत्सूर्य्यँस्यदेवुत्वन्तन्महि
त्वम्मुद्धचाकर्त्तोर्व्वितंतुठंसञ्जंभार ॥ युदेदयुंक्तहुरितं॑ःसुधस्थादाद्रात्री
व्वासंस्तनुतेसिमस्म्मै ॥ ११ ॥ तन्मित्रस्युव्वरुणस्याभिचक्षेसूर्य्योँरु
पङ्कृणुतेद्योरुपस्थे ॥ अनन्तमुन्न्यद्रुशंदस्युपाजं॑ःकृष्णमुन्न्यद्धुरितुःस
म्भरान्ति ॥ १२ ॥ बण्णमुहाँ २॥ऽअंसिसूर्य्युबडादित्यमुहाँ २॥ऽअंसि ॥
मुहस्तेसुतोमंहिमापंनस्यतुद्धादेवमुहाँ २॥ऽअंसि ॥ १३ ॥ बट्सूं
र्य्युश्श्रवंसामुहाँ २॥ऽअंसिसुत्रादेवमुहाँ २॥ऽअंसि ॥ मुह्नादुेवानांमसु
र्य्यं॑ःपुरोहितोव्विभुज्ज्योतिरदांभ्यम् ॥ १४ ॥ श्रायंन्तऽइवसूर्य्यंव्वि १.

श्चोदिन्द्रस्यभक्षत ॥ ब्रसूंनिजातेजनंमानुऽओजंसाप्प्रातेंभागन्नदी
धिम ॥ १५ ॥ अद्यादेवाऽउादेतासूर्य्यस्यनिरंहसःपिपृतानिरंवु
द्यात् ॥ तन्नोमित्रोव्वरुणोमामहन्तामादितिःसिन्धुःपृथिवीऽउतद्यौः
॥१६॥ आकृष्णेनरजंसाव्वर्त्तमानोनिवेशयन्नमृतम्मर्त्यञ्च ॥ हिरण्ययें
नसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ १७ ॥ ॥ इति सर्ठहि
तायांरुद्रपाठेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ शतरुद्रिय प्रारम्भ ॐ नमंस्तेरुद्रम
न्यवंऽउतोतऽइषवेनमः ॥ बाहुभ्यांमुततेनमः ॥ १ ॥ यातेरुद्राशि
वातनूरघोरापापकाशिनी ॥ तयानस्तन्वाशन्तंमयागिरिंशन्ताभि

चांकशीहि ॥ २ ॥ यामिषुंङ्गिरिशन्तुहस्तेंबिभर्ष्यस्तवे ॥ शिवाङ्गिरि
त्रुताङ्कुरुमाहिर्ठःसीःपुरुषञ्जगत् ॥ ३ ॥ शिवेनुव्वचंसात्वागिरिशाच्छा
वदामसि ॥ यथांनुःसर्व्वमिज्जगंदयुक्ष्मर्ठःसुमनाऽअसंत् ॥४॥ अद्ध्यवो
चदधिवुक्ताप्प्रंथमोदैव्व्योभिषक् ॥ अहींश्चसर्व्वाञ्जम्भयुन्त्सर्व्वाश्चयातु
धान्योधराचीःपरांसुव ॥ ५ ॥ असौयस्ताम्रोऽअंरुणऽउतबुब्भ्रुःसुम-
ङ्गलंः ॥ येचैनर्ठःरुद्राऽअभितोदिक्षुश्रिताःसंहस्रशोवैषार्ठःहेडऽईमहे
॥६॥ असौयोवसर्प्पतिनीलंग्ग्रीवोविलोहितः ॥ उतैनंङ्गोपाऽअंदृश्रन्न
दृश्रन्नुदहार्य्यःसदृष्टोमृडयातिनः ॥ ७ ॥ नमोस्तुनीलंग्ग्रीवायस

हस्राक्षायमीढुषे ॥ अथोयेऽअंस्यसत्त्वानोहन्तेभ्योंकरन्नमः ॥ ८ ॥
प्रमुञ्चधन्वंनुस्त्वमुभयोरात्त्वर्न्योंर्ज्याम् ॥ याश्चंतेहस्तऽइषवःपराता
भंगवोवप ॥ ९ ॥ विज्यन्धनुःकपर्दिनोविशंल्योबाणंवाँ २ ॥ ऽउत ।
अनेंशन्नस्ययाऽइषवऽआभुरंस्यनिषङ्गधिः ॥ १० ॥ यातेंहेतिर्म्मीढु
ष्टमहस्तेंबभूवंतेधनुः ॥ तयास्मान्विश्श्वतस्त्वमयक्ष्मयापरिंभुज ॥
॥ ११ ॥ परिंतेधन्न्वंनोहेतिरस्म्मान्वृणक्तुविश्श्वतः ॥ अथोयऽइषु
धिस्तवारेऽअस्म्मन्निधेंहितम् ॥ १२ ॥ अवतत्त्यधनुष्ट्वꣳसहंस्राक्षशतें
षुधे ॥ निशीर्य्यशल्यानाम्मुखाशिवोनःसुमनाभव ॥ १३ ॥ नमस्तऽ

आयुन्धायानातताय धृष्णवे ॥ उभाब्भ्यामुततेनमो बाहुब्भ्यान्तवधन्वने ॥ १४ ॥ मानोमहान्तमुतमानोऽअब्भकम्मानुऽउक्षन्तमुतमानऽउक्षितम् ॥ मानोब्वधीःपितरम्मोतमातरम्मानः प्प्रियास्तन्न्वोरुद्ररीरिषः ॥ १५ ॥ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्श्वेषुरीरिषः ॥ मानोब्वीरान्नुद्रभामिनोब्वधीर्हविष्म्मन्तःसदमित्त्वाहवामहे ॥१६॥ नमोहिरण्यबाहवेसेनान्न्येदिशाञ्चपतयेनमोनमोब्वृक्षेब्भ्योहरिकेशेब्भ्यः पशूनाम्पतयेनमोनमः शष्प्पिञ्जरायत्त्विषीमतेपथीनाम्पतयेनमोनमोहरिकेशायोपवीतिनेपुष्टानाम्पतयेनमोनमोबब्भ्लुशा

यं ॥ १७ ॥ नमो बभ्लुशाय व्याधिनेन्नानाम्पतये नमो नमो भुवस्यै हेत्यै जगताम्पतये नमो नमो रुद्रायाततायिने क्षेत्राणाम्पतये नमो नमः सूतायाहन्त्यै वनानाम्पतये नमो नमो रोहिताय ॥ १८ ॥ नमो रोहिताय स्थपतये वृक्षाणाम्पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनाम्पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणाम्पतये नमो नमऽउच्चैर्घोषायाक्रन्दयते पत्तीनाम्पतये नमो नमः कृत्स्नाय ॥ १९ ॥ नमः कृत्स्नायतया धावते सत्त्वनाम्पतये नमो नमः सहमानाय निव्याधिनऽआव्याधिनीनाम्पतये नमो नमो निषङ्गिणे ककुभाय स्तेनानाम्पतये नमो नमो नि

रु. चे॒रवै॑परिच॒रायार॑ण्याना॒म्पत॑ये॒नमो॒नमो॑वञ्च॑ते ॥ २० ॥ नमो॒वञ्च॑ते अ.
१२ परि॒वञ्च॑तेस्तायू॒नाम्पत॑ये॒नमो॒नमो॑निष॒ङ्गिण॑ऽइषुधि॒मते॒तस्क॑राणा॒म्प ५
त॑ये॒नमो॒नमः॑सृका॒यिभ्यो॒जिघा॑ᳪं॑सद्भ्यो॒मुष्ण॒ताम्पत॑ये॒नमो॒नमो॑
ऽसि॒मद्भ्यो॒नक्त॒ञ्चर॑द्भ्योविकृ॒न्ताना॒म्पत॑ये॒नमः॑ ॥ २१ ॥ नम॑ऽउष्णी॒षि
णे॑गिरिच॒राय॑कुलु॒ञ्चाना॒म्पत॑ये॒नमो॒नम॒ऽइषु॑मद्भ्यो॑धन्वा॒यिभ्य॑श्चवो॒
नमो॒नम॑ऽआतन्वा॒नेभ्यः॑प्रति॒दधा॑नेभ्यश्चवो॒नमो॒नम॑ऽआ॒यच्छ
द्भ्योस्य॑द्भ्यश्चवो॒नमो॒नमो॑वि॒सृज॑द्भ्यः ॥ २२ ॥ नमो॑वि॒सृज॑द्भ्यो॒वि
ध्य॑द्भ्यश्चवो॒नमो॒नमः॑स्व॒पद्भ्यो॒जाग्र॑द्भ्यश्चवो॒नमो॒नमः॑शया॑नेभ्य १२

ऽआसीनेभ्यश्चवोनमोनमस्तिष्ठद्भ्योधावद्भ्यश्चवोनमोनमःसभा
भ्यः ॥ २३ ॥ नमःसभाभ्यःसभापतिभ्यश्चवोनमोनमोऽश्वेभ्यो
श्वपतिभ्यश्चवोनमोनमऽआव्याधिनीभ्योविविध्यन्तीभ्यश्चवोन
मोनमऽउगणाभ्यस्तृंहतीभ्यश्चवोनमोनमोगणेभ्यः॥२४॥ नमो
गणेभ्योगणपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपतिभ्यश्चवोनमो
नमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमोनमोविरूपेभ्योविश्वरूपे
भ्यश्चवोनमोनमःसेनाभ्यः॥ २५ ॥ नमःसेनाभ्यःसेनानिभ्यश्च
वोनमोनमोरथिभ्योऽअरथेभ्यश्चवोनमोनमःक्षत्तृभ्यःसङ्ग्रहीतृ

रु. १३ भ्यश्चवोनमोनमोमहद्भ्योऽअर्भकेभ्यश्चवोनमः ॥ २६ ॥ नमस्तक्ष अ. ५
भ्योरथकारेभ्यश्चवोनमोनमःकुलालेभ्यःकर्म्मारेभ्यश्चवोनमो
नमोनिषादेभ्यःपुञ्जिष्टेभ्यश्चवोनमोनमःश्वनिभ्योमृगयुभ्यश्च
वोनमोनमःश्वभ्यः ॥ २७ ॥ नमःश्वभ्यःश्वपतिभ्यश्चवोनमोन
मोभवायचरुद्रायचनमःशर्वायचपशुपतयेचनमोनीलग्रीवायचशि
तिकण्ठायचनमःकपर्द्दिने ॥ २८ ॥ नमःकपर्द्दिनेचव्युप्तकेशायच
नमःसहस्राक्षायचशतधन्वनेच ॥ नमोगिरिशयायचशिपिविष्टाय १३
चनमोमीढुष्टमायचेषुमतेचनमोह्रस्वाय ॥ २९ ॥ नमोह्रस्वायचवा

मुनायंचुनमौबृहतेचुवर्षीयसेचुनमौवृद्धायंचसुवृधेचुनमोग्र्यायचप्र
थुमायंचुनमंऽआशवे ॥ ३० ॥ नमंऽआशवेचाजिरायंचुनमुश्शीघ्यायं
चुशीभ्यायंचुनमुऽऊर्म्यायचावस्वुन्यायचुनमौनादेयायंचुद्वीप्यां
यच ॥ ३१ ॥ नमौज्ज्येष्ठायंचकनिष्ठायंचुनमंःपूर्वुजायंचापरुजायंचु
नमौमध्युमायंचापगुल्भायंचुनमौजघुन्यायचबुध्न्यायचुनमुस्सो
भ्यायं ॥ ३२ ॥ नमुस्सोभ्यायंचप्रतिसुर्यायंचुनमोयाम्म्यायं
चुक्षेम्म्यायंचुनमुश्श्लोक्यायंचावसान्यायचुनमंऽउर्वुर्यायचुख
ल्यायंचुनमोवन्यायं ॥ ३३ ॥ नमोवन्यायंचुकक्ष्यायंचुनमंःश्रुवा

यंचप्प्रतिश्श्रुवायंचुनमंऽआशुषैणायचाशुरंथायचुनमुःशूरांयचावभे
दिनैंचुनमोंबिल्म्मिनें ॥ ३४ ॥ नमोंबिल्म्मिनेंचकबुचिनेंचुनमों
व्वुर्म्मिणेंचव्वरूथिनैंचुनमं÷श्श्रुतायंचश्श्रुतसेनायंचुनमोंदुन्दुब्भ्यायचा
हनुन्न्यायचुनमोंधृषणवें ॥ ३५ ॥ नमोंधृषणवेंचप्प्रमृशायंचुनमों
निषुङ्गिणेंचेषुधिमतेंचुनमंस्तीक्ष्णेषंवेचायुधिनैंचुनमं÷स्वायुधायंचसु
धन्न्वंनेच ॥ ३६ ॥ नमुःस्स्रुत्यांयचुपत्थ्यायचुनमुःकाटच्यांयचुनी
प्यांयचुनमुःकुल्ल्यांयचसरुस्यायचुनमोंनादेयायंचवैशन्तायंचुनमुः
कूप्यांय ॥ ३७ ॥ नमुःकूप्प्यायचावुटच्यायचुनमोंव्वीदूध्ध्यांयचातुप्प्या

यचुनमो मेघ्याय च विद्युत्याय च नमो वर्ष्याय चावर्ष्याय च नमो वा
त्याय ॥ ३८ ॥ नमो वात्याय च रेष्म्याय च नमो वास्तव्याय च वास्तुपाय
च नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च नमः शङ्गवे ॥ ३९ ॥
नमः शङ्गवे च पशुपतये च नम उग्राय च भीमाय च नमोऽग्रेवधाय च दूरे
वधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्तारा
य ॥ ४० ॥ नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्करा
य च नमः शिवाय च शिवतराय च ॥ ४१ ॥ नमः पार्याय चावार्याय च
नमः प्रतरणाय चोत्तरणाय च नमस्तीर्थ्याय च कूल्याय च नमः श

ष्प्प्यांयचफेन्न्यांयचनमः सिकत्त्याय ॥४२॥ नमः सिकत्त्यायचप्प्रवा
ह्य्यायचनमः किंशिलायंचक्षयणायंचनमः कपर्द्दिनेंचपुलस्तयेंचन
मऽइरिण्यायचप्प्रपत्थ्यायचनमोव्व्रज्ज्यांय ॥४३॥ नमोव्व्रज्ज्यांयचगो
ष्ठ्यांयचनमस्तल्प्प्यांयचगेह्य्यांयचनमोहृदय्यांयचानिवेष्य्यायच
नमः काट्यांयचगह्वरेष्ठायंचनमः शुष्क्यांय ॥ ४४ ॥ नमः शुष्क्यांयच
हरित्त्यायचनमः पांसव्यायचरजस्यायचनमोलोप्प्यांयचोलप्प्या
यचनमऽऊर्व्यांयचसूर्व्यांयचनमः पर्णायं ॥ ४५ ॥ नमः पर्णायंचप
र्णशदायंचनमऽउद्गुरमांणायचाभिघ्नतेचनमऽआखिदतेचप्प्रखिद

तेचुनमऽइषुकृद्भ्योधनुष्कृद्भ्यश्चवोनमोनमोवःकिरिकेभ्योदेवानाᳬ
हृदयेभ्योनमोविचिन्वत्केभ्योनमोविक्षिणत्केभ्योनमऽआनिर्हतेभ्यः ॥४६॥ द्रापेऽअन्धसस्पतेदरिद्रनीललोहित ॥ आसाम्प्रजानामेषाम्पशूनाम्माभेर्म्मारोङ्मोचनःकिञ्चनाममत् ॥ ४७ ॥ इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वम्पुष्टङ्ग्रामेऽअस्मिन्ननातुरम् ॥ ४८ ॥ यातेरुद्रशिवातनूःशिवाविश्वाहाभेषजीशिवारुतस्यभेषजीतयानोमृडजीवसे ॥ ४९ ॥ परिणोरुद्रस्यहेतिर्वृणक्तुपरित्वेषस्यदुर्म्मतिरघायोः ॥ अवस्थिरामघ

वंह्वयस्तनुष्वुमीढ्वस्तोकायुतनंयायमृड ॥ ५० ॥ मीढुंष्टमुशिवंतम अ.
शिवोनं÷सुमनाभव ॥ पुरमेवृक्षऽआयुंधन्निधायकृत्तिंव्वसानुऽआचरुपि ५
नांकुम्बिब्भ्रुदागंहि ॥ ५१ ॥ व्विकिरिद्रुव्विलोहितुनमस्तेऽअस्तुभगवः ॥
यास्तैसुहस्रंहेतयोन्नयमुस्म्मान्निवपन्तुताः ॥ ५२ ॥ सुहस्राणिसहस्रु
शोबाहोस्तवंहेतयं÷॥तासामीशांनोभगवःपराचीनामुखाकृधि ॥५३॥
असंङ्ख्यातासुहस्राणियेरुद्राऽअधिभूम्म्यांम् ॥ तेषांᳫसहस्रयोजुनेवु
धन्न्वानितन्नमासि ॥ ५४ ॥ अस्मिन्नमहत्यर्णवेन्तरिंक्षेभुवाऽअधि ॥
तेषांᳫसह० ॥५५॥ नीलंग्ग्रीवाःशितिकण्ठादिवंरुद्राऽउपश्रिताः ॥ १६

तेषां० ॥ ५६ ॥ नीलंग्ग्रीवाःशितिकण्ठाःशुर्व्वाऽअधःक्षंमाचुराः ॥
तेषा० ॥ ५७ ॥ येवृक्षेषुशुष्पिञ्जंरानीलंग्ग्रीवाुविलोहिताः ॥ तेषां०
॥ ५८ ॥ येभूतानुामाधिपतयोविशिखासंःकपुर्द्दिनंः ॥ तेषां० ॥ ५९ ॥
येपुथाम्पंथिुरक्षंयऽऐलवृदाऽआयुर्युधंः ॥ तेषां० ॥ ६० ॥ येतुीर्त्थानि
प्प्रुचरंन्तिसृकाहंस्तानिषुङ्गिणंः ॥ तेषां० ॥ ६१ ॥ येन्नेषुविविद्ध्यंन्तु
पात्त्रेषुपिबंतुाजनांन् ॥ तेषां० ॥ ६२ ॥ यऽएतावंन्तश्चभूयांᳪसश्चदि
शोरुद्द्राविंतास्त्थुरे ॥ तेषां० ॥ ६३ ॥ नमोस्तुरुद्द्रेभ्युायेदिुवियेषाँ
वुर्षमिषवः ॥ तेभ्युोदशुप्प्राचीर्द्दशंदाक्षिुणादशंप्प्रतीचीर्द्दशोदीचीु

ईशोर्द्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयद्विष्म्मोय
श्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६४ ॥ नमोस्तुरुद्रेभ्योयेन्तरिक्षेयेषां
व्वातऽइषवः ॥ तेभ्योदशप्प्राचीर्दशदक्षिणादशप्प्रतीचीर्दशोदीची
र्दशोर्द्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्म्मो
यश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६५ ॥ नमोस्तुरुद्रेभ्योयेपृथिव्व्यां
येषामन्नमिषवः ॥ तेभ्योदशप्प्राचीर्दशदक्षिणादशप्प्रतीचीर्दशो
दीचीर्दशोर्द्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्वि
ष्म्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६६ ॥ इतिसंहितायांरुद्र

पाठेपञ्चमोऽध्यायः ॥५॥ ॥छ॥ ॥ पुनर्नमस्ते इत्यादिषोडश काण्डि
काः पठनीयाः॥१६॥एषतैरुद्रभागःसुहस्वस्त्राम्बिकयातञ्जुषस्वस्वाहै
षतैरुद्रभागऽआषुस्तैपशुः॥१॥ अवरुद्रमदीमुह्यवंदेवन्त्र्यम्बकम्॥य
थानोवस्यसस्करद्यथानःश्रेयसस्करद्यथानोव्यवसाययात्॥२॥ नम
स्तेरुद्रमन्यवऽउतोतऽइषवेनमः॥बाहुभ्यामुततेनमः ॥३॥ यातेरुद्र
शिवातनूरघोरापापकाशिनी॥ तयानस्तन्वाशन्तमयागिरिशन्ताभि
चाकशीहि।४।नताम्विदाथयऽइमाजजानान्यद्युष्माकमन्तरम्बभूव।
नीहारेणप्रावृताजल्प्याचासुतृपऽउक्थशासश्चरन्ति।५। विश्वकर्म्मा

ह्यजंनिष्टदेव्यऽआदिद्देन्धुर्व्वाँऽअंभवद्द्वितीयः ॥ तृतीयःपितांजंनितौषं
धीनामुपाङ्गर्भँव्व्यदधात्पुरुत्रा ॥ ६ ॥ मीढुष्टमशिवंतमाशिवोनंःसुम
नाभव ॥ पुरमेवृक्षऽआयुंधन्निधायकृत्तिँव्वसांनऽआचंरपिनांकम्बिभ्र
दागंहि ॥७॥ व्विकिरिद्रव्विलोंहितनमंस्तेऽअस्तुभगवः ॥ यास्तेसुहस्रं
ठंहेतयोन्यमस्म्मन्निवंपन्तुताः ॥ ८ ॥ सुहस्रांणिसहस्रशोबाह्वोस्तवं
हेतयः ॥ तासामीशांनोभगवःपराचीनामुखांकृधि ॥ ९ ॥ असं
ख्यातासहस्राणियेरुद्राऽअधिभूम्यांम् ॥ तेषांठंसहस्रयोजनेवध
न्वांनितन्मसि ॥ १० ॥ व्वयठंसोमव्व्रतेतवमनंस्तनूषुविभ्रतः ॥ प्रजा

वन्तꣳसचेमहि ॥ ११ ॥ एषतेरुद्रभागꣳसुहस्वस्राम्बिकयातञ्जुषस्व
स्वाहैषतेरुद्रभागऽआखुस्तेपशुः ॥ १२ ॥ अवरुद्रमदीमह्यवदेवन्त्र्य
म्बकम्॥यथानोवस्यसस्करद्यथानःश्रेयसस्करद्यथानोव्यवसाय
यात् ॥ १३ ॥ भेषजमसिभेषजङ्गवेश्वायपुरुषायभेषजम् ॥ सुखम्मे
षायमेष्यै ॥१४॥ त्र्यम्बकँय्यजामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्वारु
कमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥१५॥ त्र्यम्बकँय्यजामहेसुग
न्धिम्पतिवेदनम् ॥ उर्वारुकमिवबन्धनादितोमुक्षीयमामुतः ॥१६॥
एतत्तेरुद्रावसन्तेनपरोमूजवतोतीहि।अवततधन्वापिनाकावसःकृत्ति

रु. १९

वासुऽआहिँऽसन्नःशिवोतीँहि ॥ १७ ॥ त्र्यायुषञ्जमदग्नेःकश्यप
स्यत्र्यायुषम् ॥ यद्देवेषुत्र्यायुषन्तन्नोऽअस्तुत्र्यायुषम् ॥१८॥ शिवोना
मासिस्वधितिस्तेपितानमस्तेऽअस्तुमामाहिँऽसीः ॥ निवर्त्तयाम्म्या
युषेन्नाद्यायप्रजननायरायस्पोषायसुप्प्रजास्त्वायसुवीर्य्याय ॥१९॥
उग्रश्चभीमश्चध्वान्तश्चधुनिश्च ॥ सासह्वाँश्चाभियुग्वाचविक्षिपःस्वा
हा॥२०॥ अग्निँहृदयेनाशनिँहृदयाग्ग्रेणपशुपतिङ्कृत्स्नहृदयेनभ
वँय्यकृता ॥ शर्वम्मतस्नाभ्यामीशानम्मन्युनामहादेवमन्तःपर्शव्ये
नोग्ग्रन्देवँवनिष्ठुनावसिष्ठहनुःशिङ्गीनिकोश्याभ्याम् ॥२१॥उग्ग्रँल्लोहि

अ. ६

१९

तेनमित्रर्ठं सौब्र्बत्येनरुद्रन्दौर्ब्बत्येनेन्द्रम्प्रक्रीडेनमरुतोबलेनसाद्ध्या
न्प्रमुदा॥भवस्यकण्ठ्यर्ठं रुद्रस्यान्तःपार्श्व्यम्महादेवस्ययकृच्छर्व
स्यवनिष्ठुःपशुपतेःपुरीतत्॥२२॥ स्वस्तिनऽइन्द्रोवृद्धश्रवाःस्वस्तिनः
पूषाविश्ववेदाः॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पति
र्द्दधातु॥२३॥पयः पृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः
॥पयस्वतीःप्प्रदिशःसन्तुमह्यम् ॥ २४ ॥ विष्णोरराटमसिविष्णोः
श्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्द्ध्रुवोसि ॥ वैष्णवमसिविष्णवे
त्वा॥२५॥अग्निर्द्देवतावातोदेवतासूर्य्योदेवताचन्द्रमादेवतावसवोदेव

तांरुद्द्रादेवतांदित्यादेवतांमुरुतोंदेवताविश्श्वेदेवादेवताबृहस्पतिर्देवते
न्द्रोंदेवतावरुणोदेवता॥२६॥ द्यौःशान्तिरन्तरिक्षठंशान्तिःपृथिवीशा
न्तिरापःशान्तिरोषधयःशान्तिः ॥ वनस्पतयःशान्तिर्विश्श्वेदेवाःशा
न्तिर्ब्रह्मशान्तिःसर्वठंशान्तिःशान्तिरेवशान्तिःसामाशान्तिरेधि ॥
॥२७॥इतिसठंहितायांरुद्रपाठेषष्ठोऽध्यायः॥ ६ ॥ ७ ॥वाजश्श्चमेप्प्रस
वश्श्चमेप्प्रयतिश्श्चमेप्प्रसितिश्श्चमेधीतिश्श्चमेक्क्रतुश्श्चमेस्वरश्श्चमेश्श्लोकश्श्च
मेश्श्रवश्श्चमेश्श्रुतिश्श्चमेज्ज्योतिश्श्चमेस्वश्श्चमेयज्ञेनकल्पन्ताम् ॥ १ ॥
प्प्राणश्श्चमेपानश्श्चमेव्यानश्श्चमेसुश्श्चमेचित्तञ्चमेऽआधीतञ्चमेवाक्चमे

मनंश्च मेचक्षुश्च मेश्श्रोत्रंञ्च मेदक्षश्च मेबलंञ्च मेयुज्ञेनकल्पन्ताम् ॥२॥
ओजश्च मुसहश्च मऽआत्त्कमाचंमेतनूश्च मेशर्म्मंच मेवर्म्मंचमेङ्गानिच
मेस्थीनिचमेपरुंषिचमेशरीराणिचमऽआयुश्च मेजराचमेयुज्ञेनक
ल्पन्ताम् ॥ ३ ॥ ज्यैष्ठ्यंञ्चमऽआधिपत्यञ्चमेमन्युश्च मेभामश्चमे
मंश्चमेम्भंश्च मेजेमाचंमेमहिमाचंमेवरिमाचंमेप्प्रथिमाचंमेवर्षिमा
चंमेद्राघिमाचंमे वृद्धञ्चमेवृद्धिंश्च मेयुज्ञेनकल्पन्ताम् ॥ ४ ॥ सुत्त्य
श्च॥ 'नमस्ते' इत्यादि ६६ मन्त्रात्मको नमकाध्यायः पठनीयः॥ सुत्त्य
ञ्चमेश्श्रद्धाचंमेजगच्चमेधनञ्चमेविश्वंञ्चमेमहश्च मेक्क्रीडाचंमेमोदश्च

रु. मेजातञ्चमेजनिष्यमाणञ्चमेसूक्तञ्चमेसुकृतञ्चमेयज्ञेनकल्पन्ताम्॥ अ.
२१ ॥ ५ ॥ ऋतञ्चमेऽमृतञ्चमेऽयक्ष्मञ्चमेऽनामयच्चमेजीवातुश्चमेदीर्घायु ७
त्वञ्चमेऽनमित्रञ्चमेऽभयञ्चमेसुखञ्चमेशयनञ्चमेसूषाश्चमेसुदिनञ्चमेय
ज्ञेनकल्पन्ताम् ॥ ६ ॥ यन्ताचमेधर्त्ताचमेक्षेमश्चमेधृतिश्चमेविश्वञ्च
मेमहश्चमेसंविच्चमेज्ञात्रञ्चमेसूश्चमेप्रसूश्चमेसीरञ्चमेलयश्चमेयज्ञे
नकल्पन्ताम्॥७॥शञ्चमेमयश्चमेप्रियञ्चमेऽनुकामश्चमेकामश्चमेसौ
मनसश्चमेभगश्चमेद्रविणञ्चमेभद्रञ्चमेश्रेयश्चमेवसीयश्चमेयशश्चमे
यज्ञेनकल्पन्ताम्॥८॥ऊञ्च॥ ‘नमस्ते’ इत्यादि ६६ मन्त्रात्मको नम २१

काध्यायःपठनीयः ॥ ऊर्क्चमेसूनृताचमेपयश्चमेरसश्चमेघृतञ्चमेमधु
चमेसग्धिश्चमेसपीतिश्चमेकृषिश्चमेवृष्टिश्चमेजैत्रञ्चमऽऔद्भिद्यञ्चमे
यज्ञेनकल्प्पन्ताम् ॥९॥ रयिश्चमेरायश्चमेपुष्टञ्चमेपुष्टिश्चमेविभुचमेप्र
भुचमेपूर्णञ्चमेपूर्णतरञ्चमेकुयवञ्चमेऽक्षितञ्चमेऽन्नञ्चमेऽक्षुच्चमेयज्ञेनक
ल्प्पन्ताम् ॥ १० ॥ वित्तञ्चमेवेद्यञ्चमेभूतञ्चमेभविष्यच्चमेसुगञ्चमे
सुपथ्यञ्चमऽऋद्धञ्चमऽऋद्धिश्चमेक्लृप्तञ्चमेक्लृप्तिश्चमेमतिश्चमेसुम
तिश्चमेयज्ञेनकल्प्पन्ताम् ॥ ११ ॥ व्रीहयश्चमेयवाश्चमेमाषाश्चमेतिला
श्चमेमुद्गाश्चमेखल्वाश्चमेप्रियङ्गवश्चमेऽणवश्चमेश्यामाकाश्चमेनी

वारांश्चमेगोधूमांश्चमेमसूरांश्चमेयज्ञेनंकल्पन्ताम् ॥ १२ ॥ अश्मां
च॥ 'नमस्ते' इत्यादि ६६ मन्त्रात्मको नमकाध्यायः पठनीयः॥ अश्मां
चमेमृत्तिकाचमेगिरयंश्चमेपर्वताश्चमेसिकताश्चमेवनस्पतयश्चमेहिरं
ण्यञ्चमेयंश्चमेश्यामञ्चमेलोहञ्चमेसीसंञ्चमेत्रपुंचमेयज्ञेनंकल्पन्ताम्
॥ १३ ॥ अग्निश्चमऽआपश्चमेवीरुधंश्चमऽओषधयश्चमेकृष्टपच्याः
श्चमेकृष्टपच्याश्चमेग्राम्म्याश्चमेपशवंऽआरण्याश्चमेवित्तञ्चमेवित्तिं
श्चमेभूतञ्चमेभूतिश्चमेयज्ञेनंकल्पन्ताम् ॥ १४ ॥ वसुंचमेवसतिश्चं
मेकर्म्मंचमेशक्तिश्चमेत्थंश्चमऽएमश्चमऽइत्याचमेगतिश्चमेयज्ञेनंक

ल्पन्ताम् ॥१५॥ अग्निश्चं मुऽइन्द्रश्चं ॥ 'नमस्ते' इत्यादि ६६ मन्त्रात्म
को नमकाध्यायः पठनीयः ॥ अग्निश्चं मुऽइन्द्रंश्च मेसोमंश्च मुऽइन्द्रंश्च
मेसवितार्चमुऽइन्द्रंश्च मेसरस्वतीचमुऽइन्द्रंश्च मेपूषार्चमुऽइन्द्रंश्च मेबृ
हुस्पतिंश्च मुऽइन्द्रश्च मेयुज्ञेनंकल्पन्ताम् ॥१६॥ मित्रश्चं मुऽइन्द्रंश्च मेव
रुणश्च मुऽइन्द्रंश्च मेधातार्चमुऽइन्द्रंश्च मेत्त्वष्टांचमुऽइन्द्रंश्च मेमुरुतंश्च
मुऽइन्द्रश्च मेविश्वेचमेदेवाऽइन्द्रंश्च मेयुज्ञेनंकल्पन्ताम् ॥१७॥ पृथिवी
चंमुऽइन्द्रंश्च मेन्तरिक्षश्चमुऽइन्द्रंश्च मेद्यौश्चंमुऽइन्द्रंश्च मेसामांश्चमुऽइ
न्द्रंश्च मेनक्षत्राणिचमुऽइन्द्रंश्च मेदिशंश्चमुऽइन्द्रंश्च मेयुज्ञेनंकल्पन्ता

म्॥१८॥अꣳशुश्च॥'नमस्ते'इत्यादि६६मन्त्रात्मको नमकाध्यायः पठ
नीयः। अꣳशुश्च मे रश्मिश्च मे दाभ्यश्च मेधिपतिश्च मऽउपाꣳशुश्च मेन्त
र्यामश्च मऽऐन्द्रवायवश्च मे मैत्रावरुणश्च मऽआश्विनश्च मे प्रतिप्रस्था
नश्च मे शुक्रश्च मे मन्थी च मे यज्ञेन कल्पन्ताम् ॥ १९ ॥ आग्रयणश्च मे वै
श्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च मऽऐन्द्राग्नश्च मे महावैश्वदेवश्च मे मरु
त्वतीयाश्च मे निष्केवल्यश्च मे सावित्रश्च मे सारस्वतश्च मे पात्नीवतश्च
मे हारियोजनश्च मे यज्ञेन कल्पन्ताम् ॥२०॥ स्रुचश्च मे चमसाश्च मे वायु
व्यानि च मे द्रोणकलशश्च मे ग्रावाणश्च मेधिषवणे च मे पूतभृच्च मऽआध

वृनीयं च मे वेदिँश्च मे बर्हिश्च मेवभृथश्च मे स्वगाकारश्च मे युज्ञेनंकल्प
न्ताम् ॥ २१ ॥ अग्निश्च मे घर्म्मश्च ॥ 'नमस्ते' इत्यादि ६६ म
न्त्रात्मको नमकाध्यायः पठनीयः॥ अग्निश्च मे घुर्म्मश्च मेर्कश्च मे सूर्य्यं
श्च मे प्राणश्च मेश्वमेधश्च मे पृथिवीचुमेदितिश्च मेदितिश्च मे द्यौश्च मेऽङ्गु
लंयुःशक्वंरयोदिशश्च मे युज्ञेनंकल्पन्ताम् ॥ २२ ॥ व्रतञ्च मऽऋ
तवंश्च मेतपंश्च मेसम्वत्सुरश्च मे होरात्रेऽऊर्व्वष्ठीवेबृहद्रथन्तुरेचंमे युज्ञेनं
कल्पन्ताम् ॥ २३ ॥ एकांच ॥ 'नमस्ते' इत्यादि ६६ मन्त्रा
त्मको नमकाध्यायः पठनीयः ॥ एकांचमेतिस्रश्च मेतिस्रश्च मेपञ्चंच

मुप॒ञ्च॑ च मे स॒प्त च॑ मे स॒प्त च॑ मे॒ नव॑ च मे॒ नव॑ च मऽएका॑दश
च मे॒ त्रयो॑दश च मे॒ त्रयो॑दश च मे॒ पञ्च॑दश च मे॒ पञ्च॑दश च मे स॒
प्तद॑श च मे स॒प्तद॑श च मे॒ नव॑दश च मे॒ नव॑दश च मऽएक॑विꣳशति
श्च मे॒ त्रयो॑विꣳशतिश्च मे॒ त्रयो॑विꣳशतिश्च मे॒ पञ्च॑विꣳशतिश्च मे॒ पञ्च॑विꣳ
शतिश्च मे स॒प्तविꣳशतिश्च मे स॒प्तविꣳशतिश्च मे॒ नव॑विꣳशतिश्च मे॒ नव॑
विꣳशतिश्च मऽएक॑त्रिꣳशच्च मऽएक॑त्रिꣳशच्च मे॒ त्रय॑स्त्रिꣳशच्च मे य॒ज्ञेन॑
कल्पन्ताम् ॥ २४ ॥ चत॑स्रश्च ॥ 'नमस्ते' इत्यादि ६६ मन्त्रात्म
को नमकाध्यायः पठनीयः ॥ चत॑स्रश्च मे॒ऽष्टौ च॑ मे॒ऽष्टौ च॑ मे॒ द्वाद॑श च मे॒ द्वा

दंशश्चमेषोडशश्चमेषोडशश्चमेव्विꣳशतिश्चमेव्विꣳशतिश्चंमेचतुर्व्विꣳश
तिश्चमेचतुर्व्विꣳशतिश्चमेष्टाविꣳशतिश्चमेष्टाविꣳशतिश्चमेद्वात्रिꣳश
च्चमेद्वात्रिꣳशच्चमेषट्त्रिꣳशच्चमेषट्त्रिꣳशच्चमेचत्त्वारिꣳशच्चंमेचत्त्वा
रिꣳशच्चमेचतुश्चत्त्वारिꣳशच्चमेचतुश्चत्त्वारिꣳशच्चमेष्टाचंत्वारिꣳश
च्चमेयज्ञेनकल्पन्ताम् ॥ २५ ॥ त्र्यविश्च ॥ 'नमस्ते' इत्यादि ६६म
न्त्रात्मको नमकाध्यायः पठनीयः॥ त्र्यविश्चमेत्र्यवीचंमेदित्युवाट्चंमे
दित्यौहीचंमेपञ्चाविश्चंमेपञ्चावीचंमेत्रिवत्सश्चंमेत्रिवत्साचंमेतुर्य्य
वाट्चंमेतुर्य्यौहीचंमेयज्ञेनकल्पन्ताम् ॥ २६ ॥ पृष्ठवाट्चंमेपष्ठौ

ह्रीचंमऽउक्षाचंमेवुशाचंमऽऋषुभश्चंमेवुहच्चंमेनुड्वाँश्चंमुधेनुंश्चमेयुज्ञेनं कल्पन्ताम् ॥ २७ ॥ वाजायुस्वाहां ॥ अत्र "गणानान्त्वा" इत्यत आरभ्य नमकाध्यायन्तमध्यायपञ्चकं पठनीयम् ॥ वाजायुस्वाहांप्प्रसुवायुस्वाहांपुिजायुस्वाहाक्रुतंवेुस्वाहावुसंवेुस्वाहांहुर्प्पतंयेुस्वाहाह्नेमुग्धायुस्वाहांमुुग्धायंवैनठंशिुनायुस्वाहाविनुठंशिनंऽआन्त्यायुनायुस्वाहान्त्यांयभौवुनायुस्वाहाभुवंनस्युपतंयेुस्वाहाधिंपतयुस्वाहांप्प्रजापंतयेुस्वाहां ॥ इयन्तुराण्मुित्रायंयुन्तासिुयमंनऽऊर्जेत्वावृुष्ट्यैत्वा प्प्रजानान्त्वाधिंपत्याय ॥ २८ ॥ आयुर्युज्ञेनंकल्पतांम्प्प्राणोयुज्ञेनं

कल्प्पताञ्चक्षुर्य्युज्ञेनंकल्प्पताꣳश्श्रोत्त्रँय्युज्ञेनंकल्प्पताम्वाग्ग्युज्ञेनंक
ल्प्पताम्मनोय्युज्ञेनंकल्प्पतामुात्त्माय्युज्ञेनंकल्प्पताम्ब्रुह्ममाय्युज्ञेनंक
ल्प्पताञ्ज्योतिर्य्युज्ञेनंकल्प्पताꣳस्वर्य्युज्ञेनंकल्प्पताम्पृष्ठँय्युज्ञेनंक
ल्प्पताँय्युज्ञोय्युज्ञेनंकल्प्पताम्॥स्तोमंश्च्युयजुंश्च्युऽऋक्कच्युसामंचबृहच्चंर
थन्तुरञ्चं ॥ स्वर्द्देवाऽअगन्मुामृताऽअभूमप्प्रुजापंतेःप्प्रुजाऽअंभूमुवेट्
स्वाहा ॥ २९ ॥ इतिसꣳहितायांरुद्रपाठेसप्त० ॥७॥ ऋचुंव्वाचुम्प्प्रपंद्ये
मनोयजुःप्प्रपंद्ये्सामंप्प्राणम्प्प्रपंद्येचक्षुःश्श्रोत्त्रम्प्प्रपंद्येव्वागोजंःसुहौ
जोमयिप्प्राणापानौ ॥ १ ॥ यन्म्मेंच्छिद्रञ्चक्षुषोह्रदंयस्युमनंसोव्वाति

तृण्णुम्बृहुस्प्पातिम्मुँतद्दंधातु ॥शन्नौभवतुभुवंनस्युयस्प्पातिः॥२॥भूर्भुवुःस्वःतत्संवितुर्व्वरैण्ण्युम्भग्गोँदुवस्यंधीमाहिधियुयोयोनंःप्प्रचोदयात्
॥३॥ कयांनाश्चित्रऽआभुंवदूतीसुदावृंधुःसखां॥कयाशाचिंष्ठयावृता ॥४॥
कस्त्वांसुत्योमदांनाम्मठंहिंष्टोमत्सुदन्धंसः॥दृढाचिंदारुजेव्वसुं॥५॥
अभीषुणुःसखीनामावितार्जरितॄणाम् ॥ शुतम्भंवास्यूतिभिंः ॥ ६ ॥
कयात्त्वन्नंऽऊत्त्याभिप्प्रमंन्दसेवृषन् ॥ कयांस्तोतृब्भ्युऽआभंर ॥७॥
इन्द्रोविश्वंस्यराजति ॥ शन्नोऽअस्तुद्विपदेशञ्चतुंष्प्पदे ॥ ८ ॥ शन्नो
मित्रःशव्वरुणुःशन्नोंभवत्त्वर्य्युमा ॥ शन्नुऽइन्द्रोबृहुस्पातिुःशन्नु॥विष्णुं २६

रुरुक्रमः ॥ ९ ॥ शन्नोव्वातः पवताᳬ शन्नस्तपतु सूर्य्यः ॥ शन्नः कनि
क्रदद्देवः पर्ज्जन्योऽअभिवर्षतु ॥ १० ॥ अहानि शम्भवन्तु नः शꣳ रात्रीः प्प्र
तिधीयताम् ॥ शन्नऽइन्द्राग्नी भवतामवोभिः शन्नऽइन्द्रावरुणा रातह
व्या ॥ शन्नऽइन्द्रापूषणा व्वाजसातौ शमिन्द्रासोमा सुविताय शँय्योः ॥ ११ ॥
शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये ॥ शँय्योरभिस्रवन्तु नः ॥ १२ ॥
स्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छा नः शर्म्म सप्प्रथाः ॥ १३ ॥
आपो हि ष्ठा मयोभुवस्ता नऽऊर्ज्जे दधातन ॥ महे रणाय चक्षसे ॥ १४ ॥
यो वः शिवतमो रसस्तस्य भाजयतेह नः ॥ उशतीरिव मातरः ॥ १५ ॥

 

तस्म्मुाऽअरंङ्गमामवोयस्युक्षयांयुजिन्ववंथ॥ आपोंजुनयंथाचनः१६॥
द्यौःशान्तिरुन्तरिक्षुठंशान्तिः पृथिवीशान्तिरापुःशान्तिरोषंधयुःशा
न्तिः ॥ वनुस्प्पतंयुःशान्तिर्विश्वेदेवाःशान्तिर्ब्रह्मुशान्तिःसर्वुंठंशा
न्तिुःशान्तिरेवशान्तिःसामुाशान्तिरेधि ॥ १७ ॥ दृतेदृठंहंमामित्रस्यं
मुाचक्षुंषुासर्वाणिभूतानिुसमींक्षन्ताम् ॥ मित्रस्युाहञ्चक्षुंषुासर्वाणिभू
तानिुसमींक्षे ॥ मित्रस्युचक्षुंषुासमींक्षामहे॥ १८ ॥ दृतेदृठंहंमाज्ज्यो
क्केंसुन्दृशिंजीव्यासुञ्ज्योक्केंसुन्दृशिंजीव्यासम् ॥ १९ ॥ नमंस्तेहरं
सेशुोचिषेनमंस्तेऽअस्त्वुर्च्चिषे ॥ अुन्न्यांस्तेऽअुस्मत्तंपन्तुहेतयंःपाव

काऽअस्म्मभ्यंठंशिवोभव ॥२०॥ नमस्तेऽअस्तुविद्युतेनमंस्तेस्तन
यित्त्नवे॥नमंस्तेभगवन्नस्तुयतःस्वःसुमीहंसे ॥२१॥ यतोंयतःसुमीहं
सेततोंनोऽअभंयङ्कुरु ॥शन्नः कुरुप्प्रजाभ्योभंयन्नःपशुभ्यः ॥ २२॥
सुमित्रियानऽआपऽओषंधयःसन्तुदुर्म्मित्रियास्तस्म्मैसन्तुयोस्म्मा
न्द्वेष्टियञ्चंवयन्द्विष्म्मः ॥२३॥ तच्चक्षुर्द्देवहिंतम्पुरस्ताच्छुक्रमुच्चंरत॥
पश्येमशुरदंःशुतञ्जीवेमशुरदंःशुतठंशृणुंयामशुरदंःशुतम्प्रब्रंवामशु
रदंःशुतमदींनाःस्यामशुरदंःशुतम्भूयंश्चशुरदंःशुतात् ॥ २४ ॥
इतिसठंहितायांरुद्रपाठेऽष्टमोऽध्यायः ॥८॥ ॥ॐ नमः शिवाय॥

॥ इति श्रीजयपुरनिवासिपंडितश्रीमाधवप्रसादकृतसुव्यवस्थाशोधना रुद्री समाप्ता ॥

॥ श्रीगणेशायनमः ॥ ॥ जटाकटाहसंभ्रमभ्रमन्निलिंपनिर्झरी-वि
लोलवीचिवल्लरीविराजमानमूर्धनि ॥ धगद्धगद्धगज्ज्वलल्ललाटपट्टपा
वके किशोरचंद्रशेखरेरतिःप्रातिक्षणंमम ॥ १ ॥ धराधरेंद्रनंदिनीवि
लासबंधुबंधुर-स्फुरद्दृगंतसंततिप्रमोदमानमानसे ॥ कृपाकटाक्षधो
रणीनिरुद्धदुर्धरापदि क्वचिच्चिदंबरेमनोविनोदमेतुवस्तुनि ॥ २ ॥ ज
टाभुजंगपिंगलस्फुरत्फणामणिप्रभा-कदंबकुंकुमद्रवप्रलिप्तदिग्वधूमु
खे ॥ मदांधसिंधुरस्फुरत्त्वगुत्तरीयमेदुरे मनोविनोदमद्भुतंबिभर्तुभूत
भर्तरि ॥ ३ ॥ सहस्रलोचनप्रभृत्यशेषलेखशेखर-प्रसूनधूलिधोरणीवि

धूसरांघ्रिपीठभूः ॥ भुजंगराजमालयानिबद्धजाटजुटकः श्रियोचिराय
जायतांचकोरबंधुशेखरः ॥ ४ ॥ ललाटचत्वरज्वलद्धनंजयस्फुलिंग
भा-निपीतपंचसायकंनमन्निलिंगनायकम् ॥ सुधामयूखलेखयाविरा
जमानशेखरं महःकपालिसंपदेशिरोजटालमस्तुनः ॥ ५ ॥ करालभाल
पट्टिकाधगद्धगद्धगज्ज्वल-द्धनंजयाधरीकृतप्रचंडपंचसायके ॥ धराध
रेंद्रनंदिनीकुचाग्रचित्रपत्रक-प्रकल्पनैकशिल्पिनित्रिलोचनेमतिर्मम
॥ ६ ॥ नवीनमेघमंडलीनिरुद्धदुर्धरस्फुरत्-कुहूनिशीथिनीतमःप्रबंध
बंधुकंधरः ॥ निलिम्पानिर्झरीधरस्तनोतुकृत्तिसिंधुरः कलानिधानबं

धुरःश्रियंजगद्धुरंधरः ॥ ७ ॥ प्रफुल्लनीलपंकजप्रपंचकालिमच्छटा-वि
डंबिकंठकंधरारुचिप्रबंधकंधरम् ॥ स्मरच्छिदंपुरच्छिदंभवच्छिदंम
खच्छिदं गजच्छिदांधकच्छिदंतमंतकच्छिदंभजे ॥ ८ ॥ अगर्वसर्व
मंगलाकलाकदम्बमंजरी-रसप्रवाहमाधुरीविजृंभणामधुव्रतम् ॥ स्म
रांतकंपुरांतकंभवांतकंमखांतकं गजांतकांधकांतकंतमंतकांतकंभजे
॥ ९ ॥ जयत्वदभ्रविभ्रमभ्रमद्भुजंगमस्फुरद्-धगद्धगद्विनिर्गमत्कराल
भालहव्यवाट् ॥ धिमिद्धिमिद्धिमिद्ध्वनन्मृदंगतुंगमंगल-ध्वनिक्रमप्रव
र्तितप्रचण्डताण्डवःशिवः ॥ १० ॥ दृषद्विचित्रतल्पयोर्भुजंगमौक्ति

कस्रजोर्वरिष्ठरत्नलोष्ठयोःसुहृद्विपक्षपक्षयोः ॥ तृणारविंदचक्षुषोःप्र
जामहीमहेन्द्रयोः समंप्रवर्तयन्मनःकदासदाशिवंभजे ॥ ११ ॥ कदा
निलिंपनिर्झरीनिकुंजकोटरेवसन् विमुक्तदुर्मतिःसदाशिरःस्थमंज
लिंवहन् ॥ विमुक्तलोललोचनोललामभाललग्नकः शिवेतिमंत्रमुच्चर
न्कदासुखीभवाम्यहम् ॥ १२ ॥ इदंहिनित्यमेवमुक्तमुत्तमोत्तमंस्त
वं पठन्स्मरन्ब्रुवन्नरोविशुद्धिमेतिसंततम् ॥ हरेगुरौसुभक्तिमाशुया
तिनाऽन्यथागातिं विमोहनंहिदेहिनांसुशंकरस्यचिंतनम् ॥ १३ ॥
पूजाऽवसानसमयेदशवक्त्रगीतं यःशंभुपूजनमिदंपठतिप्रदोषे ॥ त

स्यास्थिरांरथगजेंद्रतुरंगयुक्तां लक्ष्मींसदैवसुमुखींप्रददातिशंभुः १४॥
इति श्रीरावणविरचितं शिवतांडवस्तोत्रं संपूर्णम् ॥ ॥ ॥

आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः॥ संचारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो यद्यत्कर्म करोमि तत्तदखिलंशंभोतवाराधनम् १

इदं पुस्तकं मुम्बय्यां खेमराजश्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) यन्त्रालये मुद्रयित्वा प्रकाशितम् ।

आश्विने संवत् २०२४ शके १८८९

